श्रीलक्ष्मीस्तोत्रं लोपामुद्रा

॥ पूर्व पीठिका ॥

लोपामुद्रा श्रियाः पादौ धृत्वाननाम सादरम् ।
ववन्दे स्तवनं चक्रे तव लक्ष्मि सदा सती ॥ १॥

श्रुणु तत् स्तवनं येन स्तावकाः स्युर्धनाश्रयाः ।
नैकसम्पत् समायुक्ताः त्वया प्रसन्नयेक्षिताः ॥ २॥

॥ मूलपाठ श्रीलोपामुद्रा उवाच ॥

मातर्नमामि कमले पद्मायतसुलोचने ।
श्रीविष्णुहृत्कमलस्थे विश्वमातर्नमोऽस्तु ते ॥ १॥

क्षीरसागरसत्पुत्रि पद्मगर्भाभसुन्दरि ।
लक्ष्मि प्रसीद सततं विश्वमातर्नमोऽस्तु ते ॥ २॥

महेन्द्रसदने त्वं श्रीः रुक्मिणि कृष्णभामिनि ।
चन्द्रे ज्योत्स्ना प्रभा सूर्ये विश्वमातर्नमोऽस्तु ते ॥ ३॥

स्मितानने जगध्दात्रि शरण्ये सुखवर्द्धिनि ।
जातवेदसि दहने विश्वमातर्नमोऽस्तु ते ॥ ४॥

ब्रह्माणि त्वं सर्जनाऽसि विष्णौ त्वं पोषिका सदा ।
शिवौ संहारिका शक्तिः विश्वमातर्नमोऽस्तु ते ॥ ५॥

त्वया शूरागुणीविज्ञा धन्यामान्याकुलीनका ।
कलाशीलकलापाढ्यै विश्वमातर्नमोऽस्तु ते ॥ ६॥

त्वया गजस्तुरङ्गश्च स्त्रैणस्तृर्णं सरः सदः ।
देवो गृहं कणः श्रेष्ठा विश्वमातर्नमोऽस्तु ते ॥ ७॥

त्वया पक्षीपशुः शय्या रत्नं पृथ्वी नरो वधूः ।
श्रेष्ठा शुध्दा महालक्ष्मि विश्वमातर्नमोऽस्तु ते ॥ ८॥

लक्ष्मि श्रि कमले पद्मे रमे पद्मोद्भवे सति ।
अब्धिजे विष्णुपत्नि त्वं प्रसीद सततं प्रिये ॥ ९॥

॥ फल श्रुतिः ॥

इति स्तुता प्रसन्ना च श्रीरुवाच पतिव्रताम् ।
लोपामुद्रे मुने जाने वां यत हृत्तापकारणम् ॥ १॥

सुचेतनं दुनोत्येव काशीविश्लेषजोऽनलः ।
युवां वाराणसीं प्राप्य सिध्दिं प्रप्यस्थ ईप्सिताम् ॥ २॥

ये पठिष्यन्ति मत्स्तोत्रं तापदारिद्र्यनाशकम् ।
इष्टसम्पत्प्रदं तेषां जयसन्ततिकारकम् ॥ ३॥

मम सान्निध्यदं बालग्रहादिव्यधिनाशनम् ।
भविष्यति मम सारुप्यादिप्रमोक्षणं तथा ॥ ४॥

॥ श्रीलक्ष्मीनरायणसंहितायां श्रीलोपामुद्राकृत श्रीलक्ष्मीस्तोत्रम् ॥

॥ श्रीलक्ष्मीस्तोत्रं अगस्त्यरचितम् ॥

संकलन ः डॉ। मनस्वी श्रीविद्यालंकार `मनस्वी'
ऋषिवर अगस्त द्वारा रचित श्रीलक्ष्मी स्तोत्र यह स्तोत्र अत्यंत फलदायी है ।
जय पद्मपलाशाक्षि जय त्वं श्रीपतिप्रिये ।
जय मातर्महालक्ष्मि संसारार्णवतारिणि ॥

महालक्ष्मि नमस्तुभ्यं नमस्तुभ्यं सुरेश्वरि ।
हरिप्रिये नमस्तुभ्यं नमस्तुभ्यं दयानिधे ॥

पद्मालये नमस्तुभ्यं नमस्तुभ्यं च सर्वदे ।
सर्वभूतहितार्थाय वसुवृष्टिं सदा कुरु ॥

जगन्मातर्नमस्तुभ्यं नमस्तुभ्यं दयानिधे ।
दयावति नमस्तुभ्यं विश्वेश्वरि नमोऽस्तु ते ॥

नमः क्षीरार्णवसुते नमस्त्रैलोक्यधारिणि ।
वसुवृष्टे नमस्तुभ्यं रक्ष मां शरणागतं ॥

रक्ष त्वं देवदेवेशि देवदेवस्य वल्लभे ।
दरिद्रात्त्राहि मां लक्ष्मि कृपां कुरु ममोपरि ॥

नमस्त्रैलोक्यजननि नमस्त्रैलोक्यपावनि ।
ब्रह्मादयो नमस्ते त्वां जगदानन्ददायिनि ॥

विष्णुप्रिये नमस्तुभ्यं नमस्तुभ्यं जगद्धिते ।
आर्तहन्त्रि नमस्तुभ्यं समृद्धिं कुरु मे सदा ॥

अब्जवासे नमस्तुभ्यं चपलायै नमो नमः ।
चंचलायै नमस्तुभ्यं ललितायै नमो नमः ॥

नमः प्रद्युम्नजननि मातुस्तुभ्यं नमो नमः ।
परिपालय भो मातर्मां तुभ्यं शरणागतं ॥

शरण्ये त्वां प्रपन्नोऽस्मि कमले कमलालये ।
त्राहि त्राहि महालक्ष्मि परित्राणपरायणे ॥

पाण्डित्यं शोभते नैव न शोभन्ति गुणा नरे ।
शीलत्वं नैव शोभेत महालक्ष्मि त्वया विना ॥

तावद्विराजते रूपं तावच्छीलं विराजते ।
तावद्गुणा नराणां च यावल्लक्ष्मीः प्रसीदति ॥

लक्ष्मित्वयालंकृतमानवा ये पापैर्विमुक्ता नृपलोकमान्याः ।
गुणैर्विहीना गुणिनो भवन्ति दुशीलिनः शीलवतां वरिष्ठाः ॥

लक्ष्मीर्भूषयते रूपं लक्ष्मीर्भूषयते कुलं ।
लक्ष्मीर्भूषयते विद्यां सर्वाल्लक्ष्मीर्विशिष्यते ॥

लक्ष्मि त्वद्गुणकीर्तनेन कमलाभूर्यात्यलं जिह्मतां ।
रुद्राद्या रविचन्द्रदेवपतयो वक्तुं च नैव क्षमाः ॥

अस्माभिस्तव रूपलक्षणगुणान्वक्तुं कथं शक्यते ।
मातर्मां परिपाहि विश्वजननि कृत्वा ममेष्टं ध्रुवं ॥

दीनार्तिभीतं भवतापपीडितं धनैर्विहीनं तव पार्श्वमागतं ।
कृपानिधित्वान्मम लक्ष्मि सत्वरं धनप्रदानाद्धन्नायकं कुरु ॥

मां विलोक्य जननि हरिप्रिये । निर्धनं त्वत्समीपमागतं ॥

देहि मे झटिति लक्ष्मि । कराग्रं वस्त्रकांचनवरान्नमद्भुतं ॥

त्वमेव जननी लक्ष्मि पिता लक्ष्मि त्वमेव च ॥

त्राहि त्राहि महालक्ष्मि त्राहि त्राहि सुरेश्वरि ।
त्राहि त्राहि जगन्मातर्दरिद्रात्त्राहि वेगतः ॥

नमस्तुभ्यं जगद्धात्रि नमस्तुभ्यं नमो नमः ।
धर्माधारे नमस्तुभ्यं नमः सम्पत्तिदायिनी ॥

दरिद्रार्णवमग्नोऽहं निमग्नोऽहं रसातले ।
मज्जन्तं मां करे धृत्वा सूद्धर त्वं रमे द्रुतं ॥

किं लक्ष्मि बहुनोक्तेन जल्पितेन पुनः पुनः ।
अन्यन्मे शरणं नास्ति सत्यं सत्यं हरिप्रिये ॥

एतच्श्रुत्वाऽगस्तिवाक्यं हृष्यमाण हरिप्रिया ।
उवाच मधुरां वाणीं तुष्टाहं तव सर्वदा ॥

लक्ष्मीरुवाच
यत्त्वयोक्तमिदं स्तोत्रं यः पठिष्यति मानवः ।
शृणोति च महाभागस्तस्याहं वशवर्तिनी ॥

नित्यं पठति यो भक्त्या त्वलक्ष्मीस्तस्य नश्यति ।
रणश्च नश्यते तीव्रं वियोगं नैव पश्यति ॥

यः पठेत्प्रातरुत्थाय श्रद्धा-भक्तिसमन्वितः ।
गृहे तस्य सदा स्थास्ये नित्यं श्रीपतिना सह ॥

सुखसौभाग्यसम्पन्नो मनस्वी बुद्धिमान् भवेत् ।
पुत्रवान् गुणवान् श्रेष्ठो भोगभोक्ता च मानवः ॥

इदं स्तोत्रं महापुण्यं लक्ष्म्यगस्तिप्रकीर्तितं ।
विष्णुप्रसादजननं चतुर्वर्गफलप्रदं ॥

राजद्वारे जयश्चैव शत्रोश्चैव पराजयः ।
भूतप्रेतपिशाचानां व्याघ्राणां न भयं तथा ॥

न शस्त्रानलतोयौघाद्भयं तस्य प्रजायते ।
दुर्वृत्तानां च पापानां बहुहानिकरं परं ॥

मन्दुराकरिशालासु गवां गोष्ठे समाहितः ।
पठेत्तद्दोषशान्त्यर्थं महापातकनाशनं ॥

सर्वसौख्यकरं नृणामायुरारोग्यदं तथा ।
अगस्त्रिआमुनिना प्रोक्तं प्रजानां हितकाम्यया ॥

॥ इत्यगस्तिविरचितं लक्ष्मीस्तोत्रं सम्पूर्णं ॥

॥ श्रीलक्ष्मीस्तोत्रं देवकृत ॥

क्षमस्व भगवंत्यव क्षमाशीले परात्परे ।
शुद्धसत्त्वस्वरूपे च कोपादिपरिवर्जिते ॥

उपमे सर्वसाध्वीनां देवीनां देवपूजिते ।
त्वया विना जगत्सर्वं मृततुल्यं च निष्फलम् ॥

सर्वसम्पत्स्वरूपा त्वं सर्वेषां सर्वरूपिणी ।
रासेश्वर्यधि देवी त्वं त्वत्कलाः सर्वयोषितः ॥

कैलासे पार्वती त्वं च क्षीरोदे सिन्धुकन्यका ।
स्वर्गे च स्वर्गलक्ष्मीस्त्वं मर्त्यलक्ष्मीश्च भूतले ॥

वैकुंठे च महालक्ष्मीर्देवदेवी सरस्वती ।
गंगा च तुलसी त्वं च सावित्री ब्रह्मालोकतः ॥

कृष्णप्राणाधिदेवी त्वं गोलोके राधिका स्वयम् ।
रासे रासेश्वरी त्वं च वृंदावन वने-वने ॥

कृष्णा प्रिया त्वं भांडीरे चंद्रा चंदनकानने ।
विरजा चंपकवने शतशृंगे च सुंदरी ॥

पद्मावती पद्मवने मालती मालतीवने ।
कुंददंती कुंदवने सुशीला केतकीवने ॥

कदंबमाला त्वं देवी कदंबकाननेऽपि च ।
राजलक्ष्मी राजगेहे गृहलक्ष्मीगृहे गृहे ॥

इत्युक्त्वा देवताः सर्वा मुनयो मनवस्तथा ।
रूरूदुर्नम्रवदनाः शुष्ककंठोष्ठ तालुकाः ॥

इति लक्ष्मीस्तवं पुण्यं सर्वदेवैः कृतं शुभम् ।
यः पठेत्प्रातरूत्थाय स वै सर्वै लभेद् ध्रुवम् ॥

अभार्यो लभते भार्यां विनीतां सुसुतां सतीम् ।
सुशीलां सुंदरीं रम्यामतिसुप्रियवादिनीम् ॥

पुत्रपौत्रवतीं शुद्धां कुलजां कोमलां वराम् ।
अपुत्रो लभते पुत्रं वैष्णवं चिरजीविनम् ।
परमैश्वर्ययुक्तं च विद्यावंतं यशस्विनम् ।
भ्रष्टराज्यो लभेद्राज्यं भ्रष्टश्रीर्लभते श्रियम् ॥

हतबंधुर्लभेद्बंधुं धनभ्रष्टो धनं लभेत् ।
कीर्तिहीनो लभेत्कीर्तिं प्रतिष्ठां च लभेद् ध्रुवम् ॥

सर्वमंगलदं स्तोत्रं शोकसंतापनाशनम् ।
हर्षानंदकरं शश्वद्धर्म मोक्षसुहृत्प्रदम् ॥

॥ इति श्रीदेवकृत लक्ष्मीस्तोत्रं सम्पूर्णम् ॥

॥ श्रीलक्ष्मीस्तोत्रं इन्द्ररचितम् ॥

श्रीसम्पदाकल्ष्मीस्तोत्रम्

श्रीगणेशाय नमः ।
ॐ नमः कमलवासिन्यै नारायण्यै नमो नमः ।
कृष्णप्रियायै सारायै पद्मायै च नमो नमः ॥ १॥

पद्मपत्रेक्षणायै च पद्मास्यायै नमो नमः ।
पद्मासनायै पद्मिन्यै वैष्णव्यै च नमो नमः ॥ २॥

सर्वसम्पत्स्वरूपायै सर्वदात्र्यै नमो नमः ।
सुखदायै मोक्षदायै सिद्धिदायै नमो नमः ॥ ३॥

हरिभक्तिप्रदात्र्यै च हर्षदात्र्यै नमो नमः ।
कृष्णवक्षःस्थितायै च कृष्णेशायै नमो नमः ॥ ४॥

कृष्णशोभास्वरूपायै रत्नपद्मे च शोभने ।
सम्पत्यधिष्ठातृदेव्यै महादेव्यै नमो नमः ॥ ५॥

शन्याधिष्ठादेव्यै च शस्यायै च नमो नमः ।
नमो बुद्धिस्वरूपायै बुद्धिदायै नमो नमः ॥ ६॥

वैकुण्ठे या महालक्ष्मीर्लक्ष्मीः क्षीरोदसागरे ।
स्वर्गलक्ष्मीरिन्द्रगेहे राजलक्ष्मीर्नपालये ॥ ७॥

गृहलक्ष्मीश्च गृहिणां गेहे च गृहदेवता ।
सुरभि सा गवां माता दक्षिणा यज्ञकामनी ॥ ८॥

अदितिर्देवमाता त्वं कमला कमलालये ।
स्वाहा त्वं च हविर्दाने कव्यदाने स्वधा स्मृता ॥ ९॥

त्वं हि विष्णुस्वरूपा च सर्वाधारा वसुन्धरा ।
शुद्धसत्वस्वरूपा त्वं नारायणपरायाणा ॥ १०॥

क्रोधहिंसावर्जिता च वरदा च शुभानना ।
परमार्थप्रदा त्वं च हरिदास्यप्रदा परा ॥ ११॥

यया विना जगत् सर्वे भस्मीभूतमसारकम् ।
जीवन्मृतं च विश्वं च शवतुल्यं यया विना ॥ १२॥

सर्वेषां च परा त्वं हि सर्वबान्धवरूपिणी ।
यया विना न सम्भाप्यो बाध्ववैर्बान्धवः सदा ॥ १३॥

त्वया हीनो बन्धुहीनस्वत्वया युक्तः सबान्धवः ।
धर्मार्थकाममोक्षाणां त्वं च कारणरूपिणी ॥ १४॥

यथा माता स्तनन्धानां शिशूनां शैशवे सदा ।
तथा त्वं सर्वदा माता सर्वेषां सर्वरूपताः ॥ १५॥

मातृहीन स्नत्यक्तः स चेज्जीवति दैवतः ।
त्वया हीनो जनःकोऽपि न जीवत्येव निश्चितम् ॥ १६॥

सुप्रसन्नस्वरूपा त्वं मां प्रसन्ना भवाम्बिके ।
वैरिग्रस्तं च विषयं देहि मह्मं सनातनि ॥ १७॥

वयं यावत् त्वया हीना बन्धुहीनश्च भिक्षुकाः ।
सर्वसम्पद्विहीनाश्च तावदेव हरिप्रिये ॥ १८॥

राज्यं देहि श्रियं देहि बलं देहि सुरेश्वरि ।
कीर्ति देहि धनं देहि यशो मह्मं च देहि वै ॥ १९॥

कामं देहि मतिं देहि भोगान देहि हरिप्रिये ।
ज्ञानं देहि च धर्मे च सर्वसौभाग्यमीप्सितम् ॥ २०॥

प्रभावां च प्रतापं च सर्वाधिकारमेव च ।
जयं पराक्रमं युद्धे परमैश्वर्यमैव च ॥ २१॥

इत्युक्त्वा च महेन्द्रश्च सर्वैः सुरगणैः सह ।
प्रणमाम साश्रुनेत्रो मूर्ध्ना चैव पुनः पुनः ॥ २२॥

ब्रह्मा च शङ्करश्चैव शेषो धर्मश्च केशवः ।
सर्वेचक्रुः परिहारं सुरार्थे च पुनः पुनः ॥ २३॥

देवेभ्यश्च वरं दत्वा पुष्पमालां मनोहराम् ।
केशवाय ददा लक्ष्मीः सन्तुष्टा सुरसंसदि ॥ २४॥

ययुर्देवाश्च सन्तुष्टाः स्वं स्वं स्थानञ्च नारद ।
देवी ययोऐ हरेः क्रोडं दृष्टा क्षीरोदशायिनः ॥ २५॥

ययतुश्चैय स्वगृहं ब्रह्मेशानी च नारद ।
दत्वा शुभाशिषं तौ च देवेभ्यः प्रीतिपूर्वकम् ॥ २६॥

इदं स्तोत्रं महापुण्यं त्रिसन्ध्यं यः पठेन्नरः ।
कुबेरतुल्यः स भवेत् राजराजेश्वरो महान् ॥ २७॥

सिद्धस्तोत्रं यदि पठेत् सोऽपि कल्पतरूर्नरः ।
पञ्चलक्षजपेनैव स्तोत्रसिद्धिर्भवेन्नृणाम् ॥ २८॥

सिद्धस्तोत्रं यदि पठेन्मासमेकं च संयतः ।
महासुखी च राजेन्द्रो भविष्यति न संशयः ॥ २९॥

॥ इतिश्री इन्द्रकृतं लक्ष्मीस्तोत्रम् सम्पूर्णम् ॥